॥ सार्थ गायत्री मन्त्रार्थः ॥

अथ सर्वदेवात्मनः सर्वशक्तेः सर्वावभासकतेजोमयस्य परमात्मनः सर्वात्मकत्वद्योतनार्थं सर्वात्मकत्वप्रतिपादक-गायत्रीमहामन्त्रस्योपासनप्रकारः प्रकाश्यते । तत्र गायत्रीं प्रणवादिसप्तव्याहृत्युपेतां शिरःसमेतां सर्ववेदसारमिति वदन्ति, एवंविशिष्टा गायत्री प्राणायामैरुपास्या । सप्रणव-व्याहृतित्रयोपेता प्रणवान्ता गायत्री जपादिभिरुपास्या ।

तत्र शुद्धगायत्री प्रत्यग्ब्रह्मैक्यबोधिका । धियो यो नः प्रचोदयादिति ---नः अस्माकं धियः बुद्धिः यः प्रचोदयात् प्रेरयेत् इति सर्वबुद्धि-संज्ञान्तःकरणप्रकाशकः सर्वसाक्षी प्रत्यगात्मा उच्यते । तस्य प्रचोदयाच्छब्दनिर्दिष्टस्यात्मनः स्वरूपभूतं परं ब्रह्म---तत्सवितुरित्यादिपदैर्निर्दिश्यते ।

तत्र ' ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधःस्मृतः ' इति तच्छब्देन प्रत्यग्भूतं स्वतःसिद्धं परं ब्रह्मोच्यते । सवितुरिति सृष्टिस्थितिलय- लक्षणकस्य सर्वप्रपञ्चस्य समस्तद्वैतविभ्रमस्याधिष्ठानं लक्ष्यते । वरेण्यमिति सर्ववरणीयं निरतिशयानन्दरूपम् । भर्ग इत्यविद्यादि-दोषभर्जनात्मकज्ञानैकविषयम् । देवस्येति सर्वद्योतनात्मकाखण्ड-चिदेकरसम् । सवितुर्देवस्येत्यत्र षष्ठ्यर्थो राहोः शिर इतिवदौपचारिकः बुद्ध्यादिसर्वदृश्यसाक्षिलक्षणं यन्मे स्वरूपं तत्सर्वाधिष्ठानभूतं परमानन्दं निरस्तसमस्तानर्थरूपं स्वप्रकाशचिदात्मकं ब्रह्मेत्येवं धीमहि ध्यायेम ।

एवं सति सह ब्रह्मणा स्वविवर्तजडप्रपञ्चस्य रज्जुसर्पन्यायेन अपवाद-सामानाधिकरण्यरूपमेकत्वं, सोऽयमिति न्यायेन सर्वसाक्षिप्रत्यगात्मनो ब्रह्मणा सह तादात्म्यरूपमेकत्वं भवतीति सर्वात्मकब्रह्मबोधकोऽयं गायत्रीमन्त्रः सम्पद्यते ।

सप्तव्याहृतिनामयमर्थः---भूरिति सन्मात्रमुच्यते भुव इति सर्वं भावयति प्रकाशयतीति व्युत्पत्त्या चिद्रूपमुच्यते । सुव्रियत इति व्युत्पत्त्या सुष्ठु सर्वैर्व्रियमाणसुखस्वरूपमुच्यते । मह इति महीयते पूज्यत इति व्युत्पत्त्या सर्वातिशयत्वमुच्यते , जन इति---जनयतीति जनः, सकल-कारणत्वमुच्यते । तप इति सर्वतेजोरूपत्वम् । सत्यमिति सर्वबाधरहितम् । एतदुक्तं भवति---यल्लोके सद्रूपं तदोंकारवाच्यं ब्रह्मैव, आत्मनोऽस्य सच्चिद्रूपस्वभावादिति । अथ भूरादयः सर्वलोका ओंकारावाच्य-

ब्रह्मात्मकाः, न तद्व्यतिरिक्तं किंचिदस्तीति व्याहृतयोऽपि सर्वात्मक-
ब्रह्मबोधिकाः ।

गायत्री-शिरसोऽप्ययमेवार्थः--- आप इत्याप्नोतीति व्युत्पत्त्या
व्यापित्वमुच्यते ज्योतिरिति प्रकाशरूपत्वम् । रस इति सर्वातिशयत्वम् ।
अमृतमिति मरणादि संसारनिर्मुक्तत्वम् ।
सर्वव्यापिसर्वप्रकाशकसर्वोत्कृष्टनित्यमुक्तमात्मरूपं
सच्चिदात्मकं यदोंकारवाच्यं ब्रह्म तदहमस्मि ।

इति गायत्रीमन्त्रस्यार्थः ।

गुहाशयब्रह्महुताशनोऽहं
    कर्त्रेदमंशाख्य हविर्हुतं सत्।
विलीयते नेदमहं भवानी-
    त्येष प्रकारस्तु विभिद्यतेऽत्र ॥

यदस्ति यद्भाति तदात्मरूपं
    नान्यत्ततो भाति न चान्यदस्ति ।
स्वभावसंवित्प्रविभाति केवला
    ग्राह्यं ग्रहीतेति मृषैव कल्पना ॥